सकलागमरहस्यवेदि-आचार्य-श्रीमद्विजयदानसूरीश्वरेभ्यो नमः ।

आचार्यवर्य-श्रीअजितप्रभसूरीश्वरविरचित-श्रीशान्तिनाथचरित्रान्तर्गतम्

# मङ्गलकलश-कथानकम् ।

क्षमामूर्ति-स्वर्गीयाचार्य-श्रीमद्विजयक्षमाभद्रसूरीश्वर-शिष्य-मुनिराज-श्रीमाणेकविजयोपदेशात्
शेठ शान्तिलाल छनाभाइ द्वारा नडीआद-श्रीजैनसङ्घज्ञानद्रव्यसम्प्राप्तार्द्धद्रव्यसाहाय्येन

**प्रकाशिका-श्रीविजयदानसूरीश्वर-जैनग्रन्थमाला ।**

पुस्तकमिदं मुम्बय्यां निर्णयसागरमुद्रणालये कोलभाटवीथ्यां २६-२८ तमे गृहे लक्ष्मीबाई नारायण चौधरी द्वारा मुद्रापयित्वा
श्रीविजयदानसूरीश्वर-जैनग्रन्थमाला-व्यवस्थापकेन वरतेजनिवासि-मास्तर पोपटलाल जीवणदासाह्वेन प्रकाशितम् ।

वीरसंवत-२४७९ ❀ आत्मसंवत्-५६ ❀ विक्रमसंवत्-२००९ ❀ ईस्वीसन्-१९५३

मङ्गल-
कलश-
॥ १ ॥

कथानकम् ।

नागेन्द्रनिर्मितफणाश्चितमौलिपार्श्वो, यो भात्युपासकसुरासुरनाथपार्श्वः ।
यत्तीर्थरक्षणपरो विदितोऽस्ति पार्श्वः, शङ्केश्वराधिपतिरस्तु सुखाय पार्श्वः ॥ १ ॥

सद्धर्मसंरक्षक-
आचार्य-
श्रीमद् विजयकमलसूरीश्वरेभ्यो
नमोनमः ।

## सद्गुरुस्तुतिः ।

सच्चारित्रपवित्रचित्रचरितं चारुप्रबोधान्वितं,
शान्तं श्रीसमतारसेन सुखदं सर्वज्ञसेवाधरम् ।
विद्वन्मण्डलमण्डनं स्वयशसा सुव्याप्तभूमण्डलं,
तं सूरिं सततं नमामि विजयानन्दाभिधं सादरम्॥१

पाठकपुङ्गव-
उपाध्याय-
श्रीमद्वीरविजयसद्गुरुभ्यो
नमोनमः ।

॥ १ ॥

Printed by Laxmibai Narayan Chaudhari, at the Nirnaya Sagar Press, 26-28, Kolbhat Street, Bombay 2.
Published by Master Popatlal Jivandas Vartejwala, Secretary Vijayadan Surishwara Jain Granthmala.

अर्हम्।

भगवच्छ्रीमद्वर्द्धमानस्वामिपादपद्मेभ्यो नमः।

सकलागमरहस्यवेदि-आचार्य-श्रीमद्विजयदानसूरीश्वरेभ्यो नमः।

आचार्य-श्रीअजितप्रभसूरीश्वरविरचितश्रीशान्तिनाथचरित्रान्तर्गतम्

# मङ्गलकलश-कथानकम्।

मानुष्यकादिसामग्रीं सम्प्राप्याऽपि प्रमादिनः। ये धर्मं नानुतिष्ठन्ति तेषां जन्म निरर्थकम्॥ १॥ जैनं धर्मं समाराध्य भूत्वा विभवभाजनम्। प्राप्ताः सिद्धिसुखं ये ते श्लाघ्या मङ्गलकुम्भवत्॥ २॥

तद्यथा-

उज्जयिन्यां महापुर्यां वैरिसिंहो महीपतिः। सोमचन्द्रा च तद्भार्या धनदत्तश्च श्रेष्ठ्यभूत्॥ ३॥ धर्मार्थी सुविनीतात्मा सत्यशीलदयान्वितः। गुरुदेवार्चनप्रीतः स श्रेष्ठी धनदत्तकः॥ ४॥ सत्यभामेति तद्भार्या शीलालङ्कृतिशालिनी। पत्यौ प्रेमपरा किन्त्वपत्यभाण्डविवर्जिता॥ ५॥ साऽन्यदा श्रेष्ठिनं पुत्रचिन्ताम्लानमुखाम्बुजम्। दृष्ट्वा पप्रच्छ हे नाथ! किं ते दुःखस्य

कारणम् ? ॥ ६ ॥ श्रेष्ठिना च समाख्याते तस्यै तस्मिन् यथातथे । श्रेष्ठिनी पुनरप्यूचे पर्याप्तं चिन्तयाऽनया ॥ ७ ॥ धर्म एव भवेन्नृणामिहामुत्र सुखप्रदः । स एव सेवनीयो हि विशेषेण सुखैषिणा ॥ ८ ॥ तत् त्वं देवे गुरौ चापि कुरु भक्तिं यथोचिताम् । देहि दानं सुपात्रेभ्यः पुस्तकं चापि लेखय ॥ ९ ॥ एवं च कुर्वतोः पुत्रो भावी यदि तदा वरम् । भविता निर्मलो नाथ ! परलोकोऽन्यथाऽऽवयोः ॥ १० ॥ हृष्टः श्रेष्ठ्यप्युवाचैवं प्रिये ! साधूदितं त्वया । सम्यगाराधितो धर्म्मो भवेच्चिन्तामणिर्नृणाम् ॥ ११ ॥ ततश्च देवपूजार्थं पुष्पग्रहणहेतवे । आकार्याऽऽरामिकं तस्मै ददौ श्रेष्ठी धनं बहु ॥ १२ ॥ स्वयं गत्वा तदारामे पुष्पाण्यानीय स प्रगे । गृहार्चामर्चयित्वा च गच्छति स्म जिनालये ॥ १३ ॥ तत्र नैषेधिकीमुख्यान् यथास्थानं दश त्रिकान्[1] । ख्यापयन् परया भक्त्या विदधे चैत्यवन्दनाम् ॥१४॥ ततः साधून् नमस्कृत्य प्रत्याख्यानं विधाय च । अतिथीनां संविभागं चकार च महामतिः ॥ १५ ॥ अन्यदप्यखिलं धर्म्मकर्म शर्मनिबन्धनम् । आह्निकं रात्रिकं चैव धनदत्तो व्यधात्सुधीः ॥ १६ ॥ अथ धर्म्मप्रभावेण तुष्टा शासनदेवता । ददौ तस्मै पुत्रवरं प्रत्यक्षीभूय साऽन्यदा ॥ १७ ॥ पुत्रे गर्भागते रात्रिशेषे श्रेष्ठिन्युदैक्षत । स्वप्ने हेममयं पूर्णकलशं मङ्गलावृतम् ॥ १८ ॥ जातश्च समये पुत्रस्ततः कृत्वोत्सवं गुरुम् । तस्मै मङ्गलकलश इत्याख्यां तत्पिता ददौ ॥ १९ ॥ कलाभ्यासपरः सोऽथाष्टवर्षप्रमितोऽन्यदा । तात ! त्वं कुत्र यासीति पप्रच्छ पितरं निजम् ॥ २० ॥ सोऽवदद्वत्स ! गत्वाऽहमारामे प्रतिवासरम् । ततः पुष्पाणि चानीय करोमि जिनपूजनम् ॥ २१ ॥ ययौ पित्रा सहान्येद्युस्तत्र सोऽपि कुतूहली । आरामिकोऽवदत्कोऽयं बालो नेत्रविशालकः ॥ २२ ॥ ज्ञात्वा च श्रेष्ठिपुत्रं

---

१—तिन्नि निसीही १ तिन्नि उ पयाहिणा २ तिन्नि चेव य पणामा ३ । तिविहा पूया य तहा ४ अवत्थतियभावणं ५ चेव ॥ १ ॥
तिदिसिनिरिक्खणविरई ६ पयभूमिपमज्जणं च तिक्खुत्तो ७ । वन्नाइतियं ८ मुद्दातियं ९ च तिविहं च पणिहाणं १० ॥ २ ॥

तं तस्मै सोऽपि ददौ मुदा । नारङ्गक(दला)रणादीनि सुस्वादूनि फलान्यलम् ॥ २३ ॥ स्वगेहे पुनरागत्य कुर्वतो जिनपूजनम् । श्रेष्ठिनोऽढौकयत्पुत्रः पूजोपकरणं स्वयम् ॥ २४ ॥ द्वितीये च दिने तेन सादरं भणितः पिता । अतः परं मया गम्यं पुष्पानयनकर्मणि ॥ २५ ॥ निश्चिन्तेनैव स्थातव्यं त्वया तात ! निजे गृहे । अत्याग्रहेण तद्वाक्यमनुमेने पिताऽपि तत् ॥ २६ ॥ एवं च कुर्वतस्तस्य धर्माभ्यासं तथाऽन्तरा । कियत्यपि गते काले यज्जातं तन्निशम्यताम् ॥ २७ ॥

अस्त्यत्र भरतक्षेत्रे चम्पा नाम महापुरी । अभूत्तत्र महाबाहुः पार्थिवः सुरसुन्दरः ॥ २८ ॥ राज्ञी गुणावली तस्य सा निजोत्सङ्गवर्त्तिनीम् । दृष्ट्वा कल्पलतां स्वप्ने पार्थिवाय न्यवेदयत् ॥ २९ ॥ राजा प्रोवाच हे देवि ! तव पुत्री भविष्यति । सर्वलक्षणसम्पूर्णा सर्वनारीशिरोमणिः ॥ ३० ॥ पूर्णकालेऽथ चार्वङ्गी सा देवी सुषुवे सुताम् । त्रैलोक्यसुन्दरी नाम तस्याश्चक्रे महीपतिः ॥ ३१ ॥ लावण्यधनमञ्जूषा सौभाग्यरसनिम्नगा । बभूव यौवनप्राप्ता सा मूर्त्तेव सुराङ्गना ॥ ३२ ॥ तां विलोक्यानवद्याङ्गीं दध्याविति धराधिपः । रमणः कोऽनुरूपोऽस्या वत्साया मे भविष्यति ॥ ३३ ॥ ऊचे च प्रेयसीः सर्वा वराहेयं सुताऽभवत् । दातव्या ब्रूत तत् कस्मा अत्रार्थे वः प्रधानता ॥ ३४ ॥ ता ऊचुरियमस्माकं जीवितादपि वल्लभा । नालं धर्त्तुं वयं प्राणान् क्षणमप्यनया विना ॥ ३५ ॥ दातव्या तदसौ मन्त्रिपुत्रायात्रैव हे प्रिय ! । प्रत्यहं नयनानन्दकारिणी दृश्यते यथा ॥ ३६ ॥ ततो राज्ञा समाहूय सुबुद्धिः सचिवो निजः । अभाणि यन्मया दत्ता त्वत्सुतायात्मनन्दिनी ॥ ३७ ॥ अमात्योऽप्यवदद्देव ! किमयुक्तं त्वमीप्यदः । कस्मैचिद् राजपुत्राय दातुं कन्या तवोचिता ॥ ३८ ॥ राज्ञोचे न त्वया वाच्यमित्यर्थे किञ्चनाऽपि भोः ! । देया त्वत्सूनवेऽवश्यं पुत्री त्रैलोक्यसुन्दरी ॥ ३९ ॥ मन्त्री कृतावहित्थोऽथ गृहे गत्वा व्यचिन्तयत् । हा व्याघ्रदुस्तटीन्याये पतितोऽस्मि करोमि

किम्? ॥ ४० ॥ गतिरम्भोपमाकारा राज्ञः पुत्री सुतस्तु मे । कुष्ठी तदेतयोर्योगं कथं जानन् करोम्यहम् ॥ ४१ ॥ अथवाऽयं मयोपायो लब्धो यत्कुलदेवताम् । आराध्य साधयिष्यामि सर्वमात्मसमीहितम् ॥ ४२ ॥ ततश्चाऽऽराधयामास विधिना कुलदेवताम् । उवाच साऽपि प्रत्यक्षीभूय मन्त्रिन्! स्मृताऽस्मि किम् ॥ ४३ ॥ मंत्र्यूचे त्वं स्वयं वेत्सि सर्वं दुःखस्य कारणम् । तथा कुरु यथा पुत्रो नीरोगाङ्गो[1] भवेन्मम ॥ ४४ ॥ देव्यूचे नान्यथाकर्त्तुं नृणां कर्म पुराकृतम् । दैवतैरपि शक्येत वृथेयं प्रार्थना तव ॥ ४५ ॥ मन्त्री प्रोवाच यद्येवं तदन्यमपि पूरुषम् । तदाकारं निराकल्यं कुतोऽप्यानीय मेऽर्प्पय ॥ ४६ ॥ तेनोद्वाह्य महाराजपुत्रीं कमललोचनाम् । अर्प्पयिष्यामि पुत्रस्य करिष्येऽस्य यथोचितम् ॥ ४७ ॥ देवतोचे पुरीद्वारेऽश्वरक्षकनरान्तिके । शीतव्यथानिरासार्थमग्निसेवापरो हि यः ॥ ४८ ॥ कुतोऽप्यानीय मयका मुक्तो भवति बालकः । स मन्त्रिन्! भवता ग्राह्यः पश्चात्कुर्य्याद्यथोचितम् ॥ ४९ ॥ (युग्मम्) ॥ इत्युक्त्वाऽन्तर्दधे देवी हृष्टोऽथ सचिवेश्वरः । सर्वां विवाहसामग्रीं प्रगुणीकुरुते स्म सः ॥ ५० ॥ अश्वपालनरं छन्नमाकार्य निजकं ततः । तस्मै निवेद्य सकलं वृत्तान्तं सत्यमादितः ॥ ५१ ॥ इदमूचे च यः कश्चिदभ्येति भवदन्तिके । कुतोऽपि बालकः सो हि समर्प्यो मेऽविलम्बितम् ॥ ५२ ॥ तं श्रेष्ठिनन्दनं तस्या वरं विज्ञाय भाविनम् । उज्जयिन्यां ययौ पुर्य्यां मन्त्रिणः कुलदेवता ॥ ५३ ॥ अन्तरिक्षस्थितोवाच सा चैवं तस्य शृण्वतः । पुष्पाण्यानीय चाऽऽरामाद्गच्छतो निजवेश्मनि ॥ ५४ ॥ स एष बालको याति पुष्पभाजनपाणिकः । परिणेष्यति यो राजकन्यकां भाटकेन हि ॥ ५५ ॥ तच्छ्रुत्वा विस्मितः सोऽथ किमेतदिति सम्भ्रमात् । तातस्य कथयिष्यामीति ध्यायन् सदनं ययौ ॥ ५६ ॥ गृहं गतस्य सा वाणी विस्मृता तस्य

१ रोगरहितम् ।

दैवती । द्वितीये दिवसेऽप्येवं श्रुत्वा पुनरचिन्तयत् ॥ ५७ ॥ अहो ! अद्यापि सा वाणी या श्रुता ह्यो मयाऽम्बरे । तदद्य सदनं प्राप्तः कथयिष्याम्यहं पितुः ॥ ५८ ॥ सोऽचिन्तयदिदं यावत्तावदुत्पाट्य वात्यया । नीतो दूरतरारण्ये चम्पापुर्याः समीपगे ॥ ५९ ॥ भयभ्रान्तस्तृपाक्रान्तः श्रान्तस्तत्र स बालकः । सन्मानसभ्रमकरं ददर्शाग्रे सरोवरम् ॥ ६० ॥ तत्र वस्त्राञ्चलापूतं पयः पीत्वाऽतिशीतलम् । तत्सेतुस्कन्धसंरूढमाशिश्राय वटद्रुमम् ॥ ६१ ॥ तदा चास्तमितो भानुरवस्थापतितस्य हि । श्रेष्ठिपुत्रस्य तस्योपकारं कर्त्तुमिवाक्षमः ॥ ६२ ॥ कृत्वा दर्भतृणै रज्जुं तयाऽऽरुह्य च तं द्रुमम् । स ददर्शोत्तराशायामदूरे ज्वलितानलम् ॥ ६३ ॥ ततो वटात्समुत्तीर्य स भीतः शीतविह्वलः । हुताशनानुसारेण चम्पापुर्या ययौ बहिः ॥ ६४ ॥ तत्रोपान्तेऽश्वपालानां कुर्वाणो वह्निसेवनम् । यावदासीदसौ हस्यमानस्तैर्दुष्टचेष्टितैः ॥ ६५ ॥ तावत्तेन नरेणैत्य पूर्वादिष्टेन मन्त्रिणा । आत्मनः पार्श्वमानीतः कृतश्च निरुपद्रवः ॥ ६६ ॥ गोपयित्वाऽतियत्नेन प्रभातसमयेऽमुना । अर्प्पितोऽमात्यवर्यस्य गृहे नीत्वा सगौरवम् ॥ ६७ ॥ भोजनाच्छादनप्रायममात्योऽप्यस्य गौरवम् । चकार सदनस्यान्तर्गोपनं च दिवानिशम् ॥ ६८ ॥ ततोऽसौ चिन्तयामास किमयं मम सत्क्रियाम् । कुरुते निर्गमं[1] चैव यत्नाद् रक्षति मन्दिरात् ॥ ६९ ॥ पप्रच्छ चान्यदाऽमात्यं तात ! वैदेशिकस्य मे । किमिदं माननं हन्त भवद्भिः क्रियतेऽधिकम् ॥ ७० ॥ का नामैषा पुरी को वा देशः को वाऽत्र भूपतिः । इति सत्यं ममाऽऽख्याहि विस्मयोऽत्र प्रवर्त्तते ॥ ७१ ॥ अमात्योऽप्यब्रवीच्चम्पानाम्नीयं नगरी वरा । अङ्गाभिधानो देशश्च राजाऽत्र सुरसुन्दरः ॥ ७२ ॥ सुबुद्धिर्नाम तस्याहं माननीयो महत्तमः । मयाऽऽनीतोऽसि वत्स ! त्वं कारणेन गरीयसा ॥ ७३ ॥ त्रैलोक्यसुन्दरी नाम राज्ञा पुत्री विवाहितुम् ।

[1] यन्निर्गमनं ।

प्रदत्ता मम पुत्राय स तु कुष्ठेन पीडितः ॥ ७४ ॥ परिणीय त्वया भद्र ! विधिना सा नृपाङ्गजा। दातव्या मम पुत्राय तदर्थं त्वामिहाऽऽनयम् ॥ ७५ ॥ तच्छ्रुत्वा मङ्गलोऽप्योचदकृत्यं किं करोष्यदः। क सा रूपवती बाला निन्द्यरोगी क ते सुतः ॥ ७६ ॥ कर्मेदं न करिष्यामि कथञ्चिदतिनिष्ठुरम्। कूपे क्षिप्त्वा जनं मुग्धं वरत्राकर्त्तनोपमम् ॥ ७७ ॥ मन्त्र्यूचे चेन्न कर्मेदं करिष्यसि सुदुर्म्मते ! । तदा त्वां निजहस्तेन मारयिष्यामि निश्चितम् ॥ ७८ ॥ इति निंस्त्रिंशमाकृष्य भणितोऽपि सुबुद्धिना। अकृत्यं नानुमेने तत् स कुलीनशिरोमणिः ॥ ७९ ॥ प्रधानपुरुषैर्मन्त्री निषिद्धस्तस्य मारणात्। अभाणि सोऽपि मन्यस्व भद्र ! त्वं मन्त्रिणो वचः ॥ ८० ॥ ततोऽसौ चिन्तयामास भवितव्यमिदं खलु। अन्यथोज्जयिनी काऽसौ ममेहागमनं क च ॥ ८१ ॥ इदमाकाशवाचाऽपि दैवत्या कथितं तदा। तत्करोम्यहमप्येवं यद्भाव्यं तद्भवत्यहो ! ॥ ८२ ॥ विचिन्त्येदं पुनः स्माह मङ्गलो मन्त्रिणं प्रति। यद्यवश्यमिदं कार्यं मयका कर्म्म निर्घृणम् ॥ ८३ ॥ तदाऽहमपि वः पार्श्वे नाथ ! नाथामि सर्वथा। मह्यं ददाति यद्राजा वस्तुजातं ममैव तत् ॥ ८४ ॥ स्थापनीयं तु तत्सर्वमुज्जयिन्याः पुरोऽध्वनि। एवमस्त्विति तद्वाक्यं मेने मन्त्र्यपि बुद्धिमान् ॥ ८५ ॥ इति मङ्गलकुम्भोक्तं सचिवः प्रत्यपद्यत। सर्वं च सज्जयामास क्रमाद्वैवाहिकं विधिम् ॥ ८६ ॥ अथ व्योम्नः प्रतिच्छन्दमिव मण्डपमुत्तमम्। आदेशकारकैर्भूपः स्वानुरूपमकारयत् ॥ ८७ ॥ कुमारकः कृतस्नानः कृतचन्दनलेपनः। सदशश्वेतवसनो हस्तविन्यस्तकङ्कणः ॥ ८८ ॥ दत्तकुङ्कुमहस्तोऽथ हस्त्यारूढो विभूषणैः। उत्तममेरुशृङ्गाग्ररूढकल्पद्रुमोपमः ॥ ८९ ॥ द्राघीयोभिर्वरस्त्रीणां उलूलुध्वनिभिर्भृशम्। पञ्चस्वनैश्च विदधद् दिवं नादमयीमिव ॥ ९० ॥ कृतशक्रधनुर्दण्डैर्मायूरातपवारणैः। वार्यमाणातपः प्राप मण्डपद्वारसन्निधिम् ॥ ९१ ॥ उत्तीर्य कुञ्जरात् तुङ्गात्

१ खड्गम्। २ याचे।

कुलस्त्रीभिः कृतं तदा। अर्घ्यमेष प्रतीयेष प्रद्योतन इव प्रगे ॥ ९२ ॥ समासन्ने ततो लग्ने हस्तिस्कन्धाधिरोपितः। स निन्ये भूपतेः पार्श्वे वस्त्राभरणभूषितः ॥ ९३ ॥ त्रैलोक्यसुन्दरी साऽथ दृष्ट्वा तं मन्मथोपमम्। अमंस्त तद्वरप्राप्त्या कृतार्थं स्वं मनस्विनी ॥ ९४ ॥ ततश्च विप्रे पुण्याहं पुण्याहमिति जल्पति। चत्वारि परितो वह्निं भ्रेमतुर्मङ्गलानि तौ ॥ ९५ ॥ प्रथमे मङ्गले राजा चारुवस्त्राण्यनेकशः। वरायादाद् द्वितीये च स्थालाभरणसञ्चयम् ॥ ९६ ॥ तृतीये मणिहेमादि चतुर्थे च रथादिकम्। जायापत्योस्तयोरित्थं जज्ञे पाणिग्रहोत्सवः ॥ ९७ ॥ कृतोद्वाहे वरे चास्मिन् वधूहस्तममुञ्चति। उवाच नृपतिर्भूयो वत्स! यच्छामि किं नु ते ? ॥ ९८ ॥ ततश्च याचितस्तेन जात्यघोटकपञ्चकम्। तत्तस्मै शीघ्रमेवासौ प्रददौ प्रीतमानसः ॥ ९९ ॥ वाद्यमाने ततस्तूर्ये भवद्धवलमङ्गलः। मन्त्रिणा स्वगृहे निन्ये समं वध्वा स मङ्गलः ॥ १०० ॥ तत्रामात्यगृहजनश्छन्नं छन्नमभापत। कथं निर्वास्यतेऽद्यापि नायं वैदेशिको नरः ॥ १०१ ॥ त्रैलोक्यसुन्दरी साऽथ चलचित्तं निजं पतिम्। ज्ञात्वेङ्गितैस्ततस्तस्योपान्तं नैवामुचत् क्षणम् ॥ १०२ ॥ ततः क्षणान्तरेणाऽसौ देहचिन्तार्थमुत्थितः। जलपात्रं गृहीत्वाऽऽशु तदनु प्राचलच्च सा ॥ १०३ ॥ कृतायामपि तस्यां तं शून्यचित्तं रहःस्थितम्। उवाच प्रेयसी कान्त! बाधते त्वां क्षुधा नु किम्? ॥ १०४ ॥ ओमिति भणिते तेन दासीहस्तेन मोदकान्। आनाय्य स्वगृहात्तस्मै ददौ त्रैलोक्यसुन्दरी ॥ १०५ ॥ भुक्तेषु तेषु पानीयं पिवता तेन भाषितम्। अहो रम्यतरा एते मोदकाः सिंहकेसराः ॥ १०६ ॥ उज्जयिन्या नगर्याश्चेन्नीरमास्वाद्यतेऽमलम्। तदा तृप्तिर्भवेन्नूनं मोदकेष्वशितेष्वपि ॥ १०७ ॥ तच्छ्रुत्वा राजपुत्री सा दध्यावाकुलचेतसा। अहो अघटमानं किं वाक्यमेष प्रजल्पति? ॥ १०८ ॥ मातृगेहमथावन्त्यामार्यपुत्रस्य भावि वा। तदसौ दृष्टपूर्वत्वाज्ज्ञानात्यस्याः

१ सूर्यं.।

स्वरूपताम् ॥ १०९ ॥ ततश्च निजहस्तेन मुखपाटवकारणम् । पञ्चसौगन्धिकं तस्मै ताम्बूलं दत्तवत्यसौ ॥ ११० ॥ सन्ध्याकाले पुनर्मन्त्रिमानुषैः प्रेरितोऽथ सः । त्रैलोक्यसुन्दरीमेवमूचे मतिमतां वरः ॥ १११ ॥ गमिष्यामि पुनर्देहचिन्तायामुदरार्त्तिभाक् । त्वया क्षणान्तरेणाऽऽगन्तव्यमादाय पुष्करम्[1] ॥ ११२ ॥ निरगाच्च ततो मन्त्रिमन्दिरात्पुरुषांश्च तान् । पप्रच्छ राजदत्तं भोः ! क्वास्ति तद्वस्तु मामकम् ॥ ११३ ॥ तैश्च तद्दर्शितं सर्वमुज्जयिन्याः पथि स्थितम् । ततः सारतरं वस्तु निक्षिप्यैकरथे वरे ॥ ११४ ॥ तस्मिंश्च योजयित्वाऽश्वांश्चतुरः पृष्ठतस्तथा । बद्ध्वैकं शेषकं वस्तु मुक्त्वा तत्रैव सोऽचलत् ॥ ११५ ॥ ( युग्मम् ) ॥ पृष्टाश्चानेन ते ग्रामानुज्जयिन्यध्वगान्नराः प्रत्येकं कथयन्ति स्म नामग्राहं मुहुर्मुहुः ॥ ११६ ॥ ततो रथाधिरूढोऽसौ तेन मार्गेण बुद्धिमान् । स्तोकैरेव दिनैः प्राप्तस्तामेव नगरीं निजाम् ॥ ११७ ॥ इतश्च पितरौ तस्य तमन्विष्य विलप्य च । बहुधा बहुभिर्घस्रैर्गतशोकौ बभूवतुः ॥ ११८ ॥ गृहाभिमुखमायान्तं रथारूढं विलोक्य तम् । बभाषेऽथापरिज्ञाय जनन्यस्य ससम्भ्रमम् ॥ ११९ ॥ प्रेर्यते गृहमध्येन राजपुत्र ! कथं रथः । कर्त्तास्यभिनवं मार्गं किं त्वं त्यक्त्वा पुरातनम् ? ॥ १२० ॥ इत्थं निषिध्यमानोऽपि न यावद्विरराम सः । आचख्यौ श्रेष्ठिनस्तावत् श्रेष्ठिन्याकुलिताशया ॥ १२१ ॥ श्रेष्ठ्यप्यस्य निषेधार्थं गृहाद्यावन्निरीयिवान् । तावद्रथात्समुत्तीर्य पितुः पादौ ननाम सः ॥ १२२ ॥ उपलक्ष्य ततस्ताभ्यामाश्लिष्टस्तनयो निजः । सद्यः प्रादुर्भवद्धर्षाश्रुपूरप्लावितेक्षणम् ॥ १२३ ॥ पप्रच्छ चोपविष्टः सन् वत्सर्द्धिः कुत ईदृशी । क्व वा कालमियन्तं त्वं स्थितोऽसि वद नन्दन ! ॥ १२४ ॥ ततश्चात्मकथा तेन पितुरग्रे निवेदिता । वाक्श्रुत्यपहारादि स्वस्थानागमनावधि ॥ १२५ ॥ अहो ! पुत्रस्य सौभाग्यमहो ! पुत्रस्य दक्षता । अहो ! धैर्य्यमहो ! भाग्यमिति प्राशंसतामिमौ ॥ १२६ ॥ ततः प्राकारसंगुप्तं स

[1] जलम् ।

स्वगेहमकारयत् । अश्वानां रक्षणार्थं च मन्दुरादिनियन्त्रणम् ॥ १२७ ॥ सोऽन्येद्युर्जनकं स्माह मम तात ! कलागमः । स्वल्पोऽस्त्यद्यापि तं पूर्णं करिष्यामि त्वदाज्ञया ॥ १२८ ॥ ततश्चानुमतः पित्रा कलाचार्यस्य सन्निधौ । कलाभ्यासं चकारासौ स्वकीयसदनान्तिके ॥ १२९ ॥ इतश्च मन्त्रिणा तेन रात्रौ मङ्गलवेषभृत् । प्रेषितो वासभवने वधूपान्ते सुतो निजः ॥ १३० ॥ शय्यारूढं च तं दृष्ट्वा दध्यौ त्रैलोक्यसुन्दरी । कोऽयं कुष्ठाभिभूताङ्गः समायातो ममान्तिकम् ॥ १३१ ॥ करस्पर्शमथो कर्तुमुद्यतेऽस्मिन् झटित्यपि । सा शय्यायाः समुत्थाय निर्ययौ भवनाद्बहिः ॥ १३२ ॥ दासीभिर्भणिता किं नु स्वामिन्यसि ससम्भ्रमा ? । साऽवदद्देवतारूपी गतः क्वापि स मे पतिः ॥ १३३ ॥ प्रत्यूचुस्ता इदानीं स प्रविष्टोऽत्र पतिस्तव । माऽवादीन्नास्त्यसावत्र कुष्ठिकः कोऽपि विद्यते ॥ १३४ ॥ दासीमध्ये ततः सुप्ता तामतीत्य विभावरीम् । त्रैलोक्यसुन्दरी प्रातर्ययौ पितृगृहं निजम् ॥ १३५ ॥ सुबुद्धिरपि दुर्बुद्धिः सोऽथ मन्त्री महीपतेः । ययौ सकाशमन्येद्युश्चिन्ताश्याममुखः किल ॥ १३६ ॥ कृतप्रणतिमासीनमथैनं पृथिवीपतिः । हर्षस्थाने विषादः किं तवेत्यूचे कृताग्रहः ॥ १३७ ॥ स जगाद महाराज ! विचित्रा कर्म्मणां गतिः । अस्माकं मन्दभाग्यानां वशात्परिणता कथम् ॥ १३८ ॥ चिन्तयत्यन्यथा जीवो हर्षपूरितमानसः । विधिस्त्वेष महावैरी कुरुते कार्यमन्यथा ॥ १३९ ॥ राजा प्रोवाच हे मन्त्रिन् ! उक्त्वा स्वं दुःखकारणम् । मामप्यमुष्य दुःखस्य संविभागयुतं कुरु ॥ १४० ॥ निःश्वस्य सचिवोऽप्यूचे देव ! दैवं करोति तत् । यद्वक्तुमपि नो शक्यमश्रद्धेयं च शृण्व ।।म ॥ १४१ ॥ स्वामिपादैः सप्रसादैर्दत्ता सूनोर्ममात्मजा । तस्यां तु परिणीतायां यद् वृत्तं तन्निशम्यताम् ॥ १४२ ॥ यादृग् राज्ञा स्वयं दृष्टस्तादृगेव सुतो मम । अधुना कुष्ठरोगाप्तो दृश्यते क्रियते नु किम् ॥ १४३ ॥ तच्छ्रुत्वा भूपतिर्दध्यौ सा नूनं मम नन्दिनी । अलक्षणा तत्प्रभावात् कुष्ठी जातोऽस्य पुत्रकः ॥ १४४ ॥ स्वकर्मफलभोक्तारः सर्वे जगति जन्तवः । अयं हि निश्चयनयो

यद्यप्यस्ति जिनोदितः ॥ १४५ ॥ तथापि व्यवहारोऽयं यो हेतुः सुखदुःखयोः । स एव क्रियते लोके भाजनं गुणदोषयोः ॥ १४६ ॥ (युग्मम्)॥ स्वकर्म्मपरिणामेन जज्ञे पुत्रोऽस्य कुष्ठिकः । जाता च तन्निमित्तत्वात्पुत्री मे दोषभाजनम् ॥ १४७॥ ऊचे च सचिवाऽनर्थमकार्षमहमीदृशम् । नादास्यं चेत्सुतां कुष्ठी नाभविष्यत्सुतोऽपि ते ॥ १४८ ॥ अमात्योऽप्यब्रवीत् स्वामिन् ! हितकार्यं प्रकुर्वताम् । को दोषो भवतामत्र दोषो मत्कर्मणां पुनः ॥ १४९ ॥ अथोत्थाय ययौ मन्त्री सा तु त्रैलोक्यसुन्दरी । इष्टाऽप्यनिष्टा संजाता राज्ञः परिजनस्य च ॥ १५० ॥ न कोऽप्येनामाललाप नाभ्यनन्दत् दृशाऽपि हि । एकत्र गुप्तगेहेऽस्थात् सा मातृगृहपृष्ठतः ॥ १५१ ॥ अचिन्तयच्च दुष्कर्म किं मया विहितं पुरा । येन क्वापि ययौ नंष्ट्वा परिणीतः स मे पतिः ॥ १५२ ॥ अन्यच्च लोकमध्येऽदः कलङ्कं समुपस्थितम् । किं करोमि क्व गच्छामि व्यसने पतिताऽस्मि हा ॥ १५३ ॥ एवं चिन्तां प्रकुर्वन्त्यास्तस्याश्चित्ते स्थितं तदा । भवितोज्जयिनीपुर्य्यां प्राप्तो नूनं स मे पतिः ॥ १५४ ॥ तदा च मोदकांस्तेन भुक्त्वा संजल्पितं किल । एते हि मोदका रम्याः किन्त्ववन्त्या जलोचिताः ॥ १५५ ॥ ततः केनाप्युपायेन तत्र गच्छाम्यहं यदि । तदान्विष्य मिलित्वाऽस्य भवामि सुखभागिनी ॥ १५६ ॥ अथान्येद्युरुवाचाम्बां हे मातर्जनको मम । एकवारं यथा वाक्यं शृणोति त्वं तथा कुरु ॥ १५७॥ तां दृष्ट्वाऽनादरपरामन्येद्युः सिंहनामकम् । सामन्तं ज्ञापयामास सा तमर्थं कृताञ्जलिः ॥ १५८ ॥ सोऽथ राजकुले गत्वा नृपं नत्वोपविश्य च । इति विज्ञपयामास प्रस्तावे वदतांवरः ॥ १५९ ॥ नृनाथ ! भवता मान्यचरी सम्प्रत्यसम्मता । वराकी वर्त्तते कष्टे सैषा त्रैलोक्यसुन्दरी ॥ १६० ॥ अस्याः संमानदानादि दूरेऽस्त्वालपनं तथा । वाक्यश्रवणमात्रेण प्रसादोऽद्य विधीयताम् ॥ १६१ ॥ पार्थिवोऽप्यश्रुपूर्णाक्षः प्रोचे सिंह ! पुराभवे । अनया विहितं किञ्चिदभ्याख्यानादि दुष्कृतम् ॥ १६२ ॥ तदियं तत्प्रभावेण कलङ्कितनूरभूत् । इष्टाऽप्यनिष्टतां प्राप्ता

गाढमस्माकमप्यहो ! ॥ १६३ ॥ वाक्यं तदद्य यत्किञ्चिदनयाऽस्ति विवक्षितम् । तद् ब्रवीतु न रुष्टैरप्यात्मीयः परिभूयते ॥ १६४ ॥ ततस्तदनुमत्यैत्य तत्र त्रैलोक्यसुन्दरी । उवाच तात ! मे वेषं कुमारोचितमर्पय ॥ १६५ ॥ भूयो राजाऽब्रवीत् सिंहं किमिदं वक्त्यसौ वचः । सोऽप्यवदद्देव ! युक्तं हि क्रमोऽस्ति यदयं किल ॥ १६६ ॥ राज्ञां गृहेषु चेत्पुत्री गुरुकार्येण केनचित् । पुंवेषं याचते तस्यै दातव्यः स न संशयः ॥ १६७ ॥ ततस्तदनुमत्याऽस्यै पुंवेषं पार्थिवो ददौ । आदिदेश च तं सिंहं तद्रक्षार्थं बलान्वितम् ॥ १६८ ॥ अभ्यधात्सुन्दरी भूयस्ताताज्ञा चेद्भवेत्तव । उज्जयिन्यां ततो यामि कारणेन गरीयसा ॥ १६९ ॥ कारणं कथयिष्यामि तज्जाते च समीहिते । अधुना कथिते तस्मिन् परिणामो न शोभनः ॥ १७० ॥ हे पुत्रि ! मम वंशस्य यथा नाभ्येति दूषणम् । तथा कार्यं त्वयेत्युक्त्वा विसृष्टा सा महीभुजा ॥ १७१ ॥ ततश्च सिंहसामन्तभूरिसैन्यसमन्विता । अखण्डितप्रयाणैः सा ययावुज्जयिनीं पुरीम् ॥ १७२ ॥ वैरिसिंहो नृपोऽथैवं शुश्राव जनतामुखात् । यच्चम्पायाः समागच्छन्नस्त्यत्र नृपनन्दनः ॥ १७३ ॥ अभियानादिसन्मानस्वागतप्रश्नपूर्वकम् । पुरे प्रवेश्य तेनासावानीतो निजमन्दिरे ॥ १७४ ॥ पृष्टा चागमनार्थं सा प्रोवाच नगरीमिमाम् । द्रष्टुमाश्चर्यसंपूर्णामागतोऽस्मि कुतूहलात् ॥ १७५ ॥ ततः प्रोक्तो नरेन्द्रेण त्वया स्थेयं ममौकसि । सुरसुन्दरराजस्य मम गेहस्य नान्तरम् ॥ १७६ ॥ राजढौकितगेहे सा तस्थौ सबलवाहना । पत्तींश्चेत्यादिशत् स्वादुनीरस्थानं निरीक्ष्यताम् ॥ १७७ ॥ पूर्वस्यां दिशि ते तत्तु ज्ञात्वा तस्यै न्यवेदयन् । तन्मार्गे कारितावासेऽवात्सीत् साऽथ नृपाज्ञया ॥ १७८ ॥ गच्छतो नीरपानार्थमन्यदाऽश्वान्निरीक्ष्य तान् । सा दध्यौ मम तातस्य सत्का एते तुरङ्गमाः ॥ १७९ ॥ तेषामनुपदं प्रेष्य पुनर्भृत्यान् विवेद सा । भर्तुर्गृहाभिधानादिसर्वशुद्धिं मनस्विनी ॥ १८० ॥ कलाभ्यासपरं तं च ज्ञात्वा त्रैलोक्यसुन्दरी । उवाच सिंहमेते हि कथं ग्राह्या-

न्तुरङ्गमाः ॥ १८१ ॥ सिंहोऽवादीत्त्वयाऽदिष्टोपायेनैव ततश्च सा । सच्छात्रं तं कलाचार्यं भोजनाय न्यमन्त्रयत् ॥ १८२ ॥ भोजनार्थमुपाध्याये तत्राऽऽयाते ददर्श सा । छात्रमध्ये स्वभर्त्तारं हृदयानन्ददायिनम् ॥ १८३ ॥ तस्मा आसनमात्मीयं स्थालं चादापयत्तदा । अकारयद्विशेषेण गौरवं भोजनादिषु ॥ १८४ ॥ ततो वस्त्राणि सर्वेभ्यो यथायुक्तमदत्त सा । तस्मै निजाङ्गलग्नं च वासोयुग्मं मनोहरम् ॥ १८५ ॥ उवाच च कलाचार्यमेतन्मध्यात् त्वदाज्ञया । यो जानाति स आख्यातु छात्रो मम कथानकम् ॥ १८६ ॥ सर्वैरपीर्ष्यया छात्रैर्निर्दिष्टः सोऽथ मङ्गलः । उपाध्यायगिरा धीमान् वक्तुमेवं प्रचक्रमे ॥ १८७ ॥ चरितं कल्पितं किं वा कथयामि कथानकम् । साऽवदच्चरितं ब्रूहि पर्याप्तं कल्पितेन भोः ! ॥ १८८ ॥ मङ्गलश्चिन्तयामास सैषा त्रैलोक्यसुन्दरी । चम्पापुर्यां भाटकेन परिणीता हि या मया ॥ १८९ ॥ केनाऽपि हेतुनेहागाद् भूत्वा पुंवेषधारिणी । भवत्वेवं कथां तावत् कथयामि निजामहम् ॥ १९० ॥ जगाद च कथा लोकप्रिया चित्रकरी भवेत् । सा च वृत्ता मदीयेऽङ्गे तामाख्यामि निशम्यताम् ॥ १९१ ॥ ततश्चात्मकथा तेनादितस्तत्र प्रकाशिता । तावद्यावदमात्येन गृहान्निर्वासितोऽस्म्यहम् ॥ १९२ ॥ अत्रान्तरे कृतालीककोपा राजसुताऽवदत् । अमुं गृह्णीत गृह्णीत रे रे मिथ्याभिभाषिणम् ॥ १९३ ॥ इत्युक्ते पत्तयस्तस्यास्तद्ग्रहार्थं समुद्यताः । तयैव वारिताः शीघ्रं स चानीतो गृहान्तरे ॥ १९४ ॥ अथैनमासनेऽध्यास्य सिंहमूचे नृपात्मजा । अयि येनाहमूढाऽस्मि स एवायं प्रियो मम ॥ १९५ ॥ किमत्र युज्यते कर्तुमित्युक्तः सोऽपि चाब्रवीत् । अयं तव भवेद्भर्त्ता तदा सेव्योऽपशङ्कितम् ॥ १९६ ॥ सोचे सिंहं तवाद्यापि चित्ते यद्यस्ति संशयः । ततोऽस्य मन्दिरे गत्वा स्थालादीनि विलोकय ॥ १९७ ॥ तद्विधातुमथो सिंहो धनदत्तगृहं ययौ । सोऽग्रे छात्रमुखात् पुत्रापायं श्रुत्वाऽऽकुलोऽभवत् ॥ १९८ ॥ पुत्रस्य गौरवोदन्तमाख्यायैतेन बोधितः । दर्शयामास च स्थालादीनि तद्भणितोऽस्य सः ॥ १९९ ॥

वध्वाः स्वरूपकथनेनाह्वाय श्रेष्ठिनं ततः । सिंहः पुनः राजपुत्र्याः समीपं समुपाययौ ॥ २०० ॥ सिंहेनानुमता साऽथ कृत्वा स्त्रीवेषमु-
द्भटम् । बभूव वल्लभा तस्य मङ्गलस्य महात्मनः ॥ २०१ ॥ ययौ च श्रेष्ठिनो वेश्म तद् युग्मं पार्थिवोऽपि तत् । आकार्य सर्ववृत्तान्तं
पृष्ट्वा श्रुत्वा विसिष्मिये ॥ २०२ ॥ ततस्तत्रैव प्रासादे गत्वा राजाज्ञया पुनः । समं त्रैलोक्यसुन्दर्य्या विललास स मङ्गलः ॥ २०३ ॥
सुन्दर्या प्रेषितः सोऽथ सिंहः सबलवाहनः । लात्वा पुरुषवेषं तं ययौ चम्पापुरीं पुनः ॥ २०४ ॥ अमुना सर्ववृत्तान्ते कथिते
जगतीपतिः । हृष्टोऽभाषिष्ट वत्साया अहो ! मे मतिकौशलम् ॥ २०५ ॥ अहो ! कुधीरमात्यस्य पापकर्मविधायिनः । येनाऽदोषाऽपि
मत्पुत्री सदोषा विहिता कथम् ? ॥ २०६ ॥ सिंहं पुनरपि प्रेष्योज्जयिन्यां निजनन्दिनीम् । सकान्तां स समानाय्य सच्चक्रे
च यथाविधि ॥ २०७ ॥ अमात्यं धारयित्वा तं मार्यमाणं महीभुजा । मङ्गलो मोचयामास गाढाभ्यर्थनया नृपात् ॥ २०८ ॥
जामातुरुपरोधेन मया मुक्तोऽसि पाप रे । इति विब्रुवता राज्ञा सोऽथ निर्वासितः पुरात् ॥ २०९ ॥ अपुत्रः सोऽथ भूपालो मेने
जामातरं सुतम् । तत्रैवानाययामास तन्मातापितरावपि ॥ २१० ॥ अन्येद्युर्मन्त्रिसामन्तसंमत्योत्सवपूर्वकम् । मङ्गलकलशं राज्ये
सुधीः स्थापयति स सः ॥ २११ ॥ यशोभद्राभिधानानां सूरीणां चरणान्तिके । सुरसुन्दरभूपालः परिव्रज्यामुपाददे ॥ २१२ ॥
राज्ये संस्थापितः कोऽपि वणिग्जातिरितीर्ष्यया । प्रत्यन्तपार्थिवा राज्यं हर्तुं तस्योपतस्थिरे ॥ २१३ ॥ सेनया चतुरङ्गिण्या सहितेन
महौजसा । दृढपुण्यप्रभावेण जिताः सर्वेऽपि तेन ते ॥ २१४ ॥ शान्ताऽमित्रस्य तस्याथ राज्यं पालयतः सतः । पत्न्यां त्रैलोक्यसुन्दर्यां
सुतोऽभूज्जयशेखरः ॥२१५॥ स च राजा निजे देशे जिनचैत्यान्यनेकशः । जिनार्चां रथयात्राश्चेत्यादिधर्ममकारयत् ॥२१६॥
अन्यदोद्यानमायातं जयसिंहाभिधं गुरुम् । गत्वा ववन्दे भावेन सकलत्रः स भूपतिः ॥ २१७ ॥ पप्रच्छ च यथा केन कर्मणा

भगवन्मया। प्राप्ता विडम्बनोद्वाहे देव्या प्राप्तं च दूषणम् ॥ २१८ ॥ सूरिरूचेऽथ भरते क्षेत्रेऽत्रैवास्ति पत्तनम्। क्षितिप्रतिष्ठितं नाम धनधान्यसमृद्धिमत् ॥ २१९ ॥ आसीत्तत्र सोमचन्द्राभिधानः कुलपुत्रकः। श्रीदेवी च तद्भार्याऽभूत् तौ मिथः प्रीतिशालिनौ ॥ २२० ॥ सोमचन्द्रः प्रकृत्याऽऽसावार्जवादिगुणान्वितः। मान्यः समस्तलोकानां तस्य भार्या च तादृशी ॥ २२१ ॥ इतस्तत्रैव नगरे जिनदेवाभिधः सुधीः। श्रावकोऽभूत्समं तेन तस्य मैत्री निरन्तरा ॥ २२२ ॥ जिनदेवो धनाकाङ्क्षी धने सत्यपि सोऽन्यदा। देशान्तरं गन्तुकामो निजं मित्रमभाषत ॥ २२३ ॥ धनायाहं गमिष्यामि मयि तत्र गते त्वया। मामकीनं धनं सप्तक्षेत्र्यां वाप्यं यथाविधि ॥ २२४ ॥ तवापि तस्य पुण्यस्य षष्ठांशो भवतादिति। दीनाराणां सहस्राणि दशैतस्यार्पयत्करे ॥ २२५ ॥ गते देशान्तरे तस्मिन् सोमचन्द्रोऽथ तत्सुहृत्। व्ययति स्म यथास्थानं तद् द्रव्यं शुद्धचेतसा ॥ २२६ ॥ आत्मीयमपि तस्यानुसारेणायं व्यधाद् वृषम्[1]। तज्ज्ञात्वा तस्य भार्याऽपि धर्मं भेजेऽनुमोदनात् ॥ २२७ ॥ तस्मिन्नेव पुरे तस्याः सखी भद्राऽभिधाऽभवत्। नन्दनश्रेष्ठिनः पुत्री देवदत्तस्य गेहिनी ॥ २२८ ॥ देवदत्तः स कालेन कर्मदोषेण केनचित्। कुष्ठी जज्ञे ततो भद्रा तत्प्रिया विषसाद सा ॥ २२९ ॥ पुरः सख्यास्तयाऽन्येद्युस्तत्स्वरूपं निवेदितम्। तया च हासपरया भणिता सा ससंभ्रमम् ॥ २३० ॥ हले त्वत्सङ्गदोषेण कुष्ठी जज्ञे पतिस्तव। ममापि दृष्टिं मा गास्त्वमतोऽपसर दूरतः ॥ २३१ ॥ सा तेन वचसा दूना तस्थौ श्याममुखी क्षणम्। हास्यमेतदिति प्रोच्य तयैवाह्लादिता ततः ॥ २३२ ॥ स सोमचन्द्रः श्रीदेव्या तया सार्द्धं च भार्यया। साधुसंसर्गतः प्राप्तं श्राद्धधर्ममपालयत् ॥ २३३ ॥ अन्ते समाधिना मृत्वा सौधर्मे त्रिदशाविमौ। दम्पती समजायेतां

[1] धर्मम्।

पञ्चपल्योपमस्थिती ॥ २३४ ॥ सौधर्मात्सोमचन्द्रात्मा च्युत्वाऽभूद् भूपतिर्भवान् । जीवश्च्युत्वा च श्रीदेव्या जज्ञे त्रैलोक्य-सुन्दरी ॥ २३५ ॥ परद्रव्येण यत्पुण्यं भवतोपार्जितं तदा । तदेषा भाटकेनैव परिणीता नृपात्मजा ॥ २३६ ॥ हास्येनापि वयस्यायै यद्दत्तमनया पुरा । तदेतस्यामिह भवे कलङ्कः समभूद् ध्रुवम् ॥ २३७॥ तदाकर्ण्य विरक्तौ तौ दत्त्वा राज्यं स्वसूनवे । राजा राज्ञी च प्रव्रज्यां पार्श्वे जगृहतुर्गुरोः ॥ २३८ ॥ क्रमेण सोऽथ राजर्षिः सर्वसिद्धान्तपारगः । स्थापितो गुरुणा सूरिपदे परिकरावृतः ॥ २३९ ॥ त्रैलोक्यसुन्दरी साध्वी स्थापिता च प्रवर्त्तिनी । विपद्योभौ च तावन्ते ब्रह्मलोकमुपेयतुः ॥ २४० ॥ ततश्च्युतौ मनुष्यत्वं प्राप्याऽनिमिषतां पुनः । एवं भवे तृतीये तौ प्रापतुः पदमव्ययम् ॥ २४१ ॥

इति मङ्गलकलशकथानकम् ।

"विद्वद्वृन्दमुखास्यमुद्रणमहद्वैदुष्यमुद्राधरः, श्रेष्ठानुष्ठितदुष्कृतघ्नतपसा वंहिष्ठधामा गुरुः ।

# समाप्तमिदं मङ्गलकलश–कथानकम् ।

मोहध्वान्तनिलीढनेत्रजनताकारुण्यकल्पद्रुमः, कल्याणं तनुतां कृताक्षविजयः श्रीदानसूरीश्वरः ॥ १ ॥"